सितकरः कलहंस इवाभित-
स्तरति संवलितो यमुनोर्मिभिः ।।१.१६।।

१८. प्रहर्षिणी ऽऽऽ ।।। ।ऽ। ऽ।ऽ ऽ

समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः ।
त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणीम् ।।२८।।

यथा मम-

मानौजःसुरभिगुणैर्यशःसितानां
निर्व्याजा निजभुजविक्रमक्रमाप्ता ।
सर्वाशाप्रणयिजनोपजीव्यमाना
भव्यानां भवति परप्रहर्षिणी श्रीः ।।१.१७।।

१९. वसन्ततिलकम् ऽऽ। ऽ।। ।ऽ। ।ऽ। ऽऽ

अभिज्ञातं तभजजैरन्तासक्तगुरुद्वयम् ।
चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः ।।२९।।

यथा मम-

तद्भाजि जन्मसचिवे भगवत्यनङ्गे
प्राप्ते लसत्कुसुममण्डलपाण्डुरेण ।
भृङ्गावली-कुटिल-कुन्तल-संनिवेशा
कान्ता वसन्ततिलकेन विभूषिता भूः ।।१.१८।।

२०. मालिनी ।।। ।।। ऽऽऽ ।ऽऽ ।ऽऽ

अष्टाक्षरविरामेण युक्तं ननमयैः सयैः ।
वदन्ति मालिनीनाम वृत्तं पञ्चदशाक्षरम् ।।३०।।

यथा मम-

नननन मयवाणी मेखलाकृष्टिकाले
प्रविचलदिव शीलं नोत्सृजन्ती दुकूलम् ।
तृणलवचलनेऽपि स्वैरिणी शङ्कमाना
दिशि दिशि कृतदृष्टिर्मालिनी कस्य नेष्टा ।।१.१९।।

२१.नर्कुटम् ।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। ।ऽ

नजभैर्जजलैरन्तगुरुभिर्नर्कुटाभिधम् ।
वृत्तं चानष्टविच्छेदं विदुः सप्तदशाक्षरम् ।।३१।।

यथा मम-

निजभुजजैर्विशालगुणविक्रमकीर्तिभरैः
प्रविदधता सुधांशुधवलं भवता भुवनम् ।
कथय कथं कृतेयमतिरागवती जनता
चरितमपूर्वमेव तव कस्य न नर्कुटकृत् ।।१.२०।।

२२. पृथ्वी ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽऽ ।ऽ

जसजैः सयलैर्गेन युताष्टनवसंहृतिः ।
दशसप्ताक्षरा पृथ्वी कथिता वृत्तवेदिभिः ।।३२।।

जवात् स रजसा युतः श्रमविसंस्थुलाङ्गः पथा
व्रजन् सततसेवकं पिशुनधाम वेश्म प्रभोः ।
कदाचिदवलोकनैः फलविवर्जितैर्मन्यते
जडः करसमर्पितामिव मदेन पृथ्वीमिमाम् ।।१.२१।।

२३. हरिणी ।।। ।।ऽ ऽऽऽ ऽ।ऽ ।।ऽ ।ऽ

नसमै रसलैर्गेन युक्ता सप्तदशाक्षरा ।
विच्छिन्ना हरिणी षड्भिश्चतुर्भिः सप्तभिस्तथा ।।३३।।

यथा मम-

न समरसनाः काले भोगाश्चलं घनयौवनं
कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते ।
किमपि कलना कालस्येयं प्रधावति सत्वरा
तरुणहरिणी संत्रस्तेव प्लवप्रविसारिणी ।।१.२२।।

२४. शिखरिणी ।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।। ।ऽ

यमनैः सभलैर्गेन युक्ता सप्तदशाक्षरा ।
षडैकादशविच्छेदवती <u>शिखरिणी</u> मता ।।३४।।

यथा मम-

यथा मन्युर्लीनः स च विभवभग्नः स्मरपद-
स्तथा जाने जाता शमसमयरम्या परिणतिः ।
इदानीं संसारव्यतिकरहरा तीव्रतपसे
विविक्ता युक्ता मे गिरिवरमही सा शिखरिणी ।।१.२३।।

२५. मन्दाक्रान्ता ऽऽऽ ऽ।। ।।। ऽऽ। ऽ।। ऽऽ

चतुःषट्सप्तविरति वृत्तं सप्तदशाक्षरम् ।
<u>मन्दाक्रान्ता</u> मभनतैस्तगगैश्चाभिधीयते ।।३५।।

यथा मम-

**मध्ये भङ्गीवलनविततापाङ्गसंसङ्गभाजः**
**स्मर्यन्ते ते यदि धृतिमुषः पक्ष्मलाक्षीकटाक्षाः ।**
**तत् किं मिथ्या नियमनिभृतैः कानने धीयते धी-**
**र्मन्दाक्रान्ता दशति निशिता पन्नगी पाणिसक्ता ।।१.२४।।**

**२६. शार्दूलविक्रीडितम्** ऽऽऽ ।।ऽ ।ऽ। ।।ऽ ऽऽ। ऽऽ। ऽ

**मसजः सततैर्गेन युक्तमेकोनविंशवत् ।**
**शार्दूलक्रीडितं प्राहुश्छिन्नं द्वादशसप्तभिः ।।३६।।**

यथा मम-

**माद्यत्सज्जसमाततोग्रसुभटोद्विन्नेभकुम्भस्थल-**
**श्लिष्यन्मौक्तिकदन्तुरः सरभसोद्वेल्लद्यशःकेशरः ।**
**जृम्भारम्भभयङ्करव्यतिकरत्रस्तैः समुद्वीक्षितः**
**शत्रूणां त्वदसिः करोति समरे शार्दूलविक्रीडितम् ।।१.२५।।**

**२७. स्रग्धरा** ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ।ऽऽ ।ऽऽ

**युक्तं मरभनैर्यैश्च त्रिभिः सप्ताक्षरैस्त्रिभिः ।**
**छेदैश्च स्रग्धरावृत्तमेकविंशाक्षरं विदुः ।।३७।।**

यथा मम-

**साराम्भानुभावप्रियपरिचयया स्वर्गरङ्गाङ्गनानां**
**लीलाकर्णावतंसश्रियमतनुगुणश्लेषया संश्रयन्त्या ।**
**आभाति व्यक्तमुक्ताविचकिललवलीवृन्दकुन्देन्दुकान्त्या**
**त्वत्कीर्त्या भूषितेयं भुवनपरिवृढ स्रग्धरेव त्रिलोकी ।।१.२६।।**

**इति सरलतरत्वात् सर्वकाव्योचितत्वात्**
**सुकविपरिचितत्वात् कीर्णकर्णामृतत्वात् ।**
**परुषविषममात्रादुर्विरामोज्झितेयं**
**प्रचुररुचिरवृत्तव्यक्तिरुक्ता हिताय ।।३८।।**

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनाम**श्रीक्षेमेन्द्र**विरचिते
**सुवृत्ततिलके वृत्तावचयो नाम प्रथमो विन्यासः ।**

## द्वितीयो विन्यासः

### गुणदोषदर्शनम्

कृते प्रसिद्धवृत्तानां लक्ष्यलक्षणसंग्रहे ।
अधुना क्रियते तेषां गुणदोषप्रदर्शनम् ।।१।।

न षट्सप्ताक्षरे वृत्ते विश्राम्यति सरस्वती ।
भृङ्गीव मल्लिकाबालकलिकाकोटिसङ्कटे ।।२।।

समासैर्लघुवृत्तानामसमासैर्महीयसाम् ।
शोभा भवति भव्यानामुपयोगवशेन वा ।।३।।

अनुष्टुप्छन्दसां भेदे कैश्चित् सामान्यलक्षणम् ।
यदुक्तं पञ्चमं कुर्याल् लघु षष्ठं तथा गुरु ।।४।।

तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि ।
तस्मादव्यभिचारेण श्रव्यतैव गरीयसी ।।५।।

यथा **कालिदासस्य**-(रघु.१.१२)

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ।।२.१।।

उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः ।
तथापि प्रथमं कुर्यात् पूर्वपादाक्षरं लघु ।।६।।

यथा **श्रीमदुत्पलराजस्य**-

हताञ्जनश्यामरुचस्तवैते स्थूलाः किमित्यश्रुकणाः पतन्ति ।
भृङ्गा इव व्यायतपङ्क्तयो ये तनीयसीं रोमलतां श्रयन्ति ।।२.२।।

सूत्रस्येवात्र तीक्ष्णाग्रं श्लोकस्य लघुना मुखम् ।
कर्णं विशति निर्विघ्नं सरलत्वं च नोज्झति ।।७।।

**गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः ।**
**करोति प्रथमं स्थूलं किञ्चित् कर्णकदर्थनाम् ।।८।।**

यथा **कालिदासस्य**- (कु.१.१)

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।**
**पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ।।२.३।।**

**त्र्यक्षरस्त्र्यक्षरैरेव च्छेदैराभाति दोधकम् ।**
**अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति ।।९।।**

यथा मम-

**सज्जनपूजनशीलनशोभामर्जय वर्जय दुर्जनसङ्गम् ।**
**दुस्तरसंसृतिसागरवेगे मज्जनकारणवारणमेतत् ।।२.४।।**

अतोऽल्पाधिकैर्यथा **तुञ्जीरस्य**-

**त्वन्मुखचन्द्रनिरीक्षणवर्त्या यः सुतरामिह निर्मलनेत्रः ।**
**सर्वजनस्य पुरः स्थितमेतत् सोऽन्तकवर्त्म न पश्यति चित्रम् ।।२.५।।**

**शालिनी श्लथबन्धैव स्वभावेन विभाव्यते ।**
**उत्तेजयेत् तां यत्नेन मन्ददीपशिखामिव ।।१०।।**

श्लथा यथा मम-

**प्लोषक्लेशं प्रोषितानां दिशन्ती मानम्लानिं मानिनीनां दधाना ।**
**गाढासक्ता सद्गुणग्लानिदाने चन्द्रस्य श्रीर्दुर्जनस्येव जाता ।।२.६।।**

**शत्रन्ताक्षरसंयोगैः किञ्चित्कार्कश्यकारिभिः ।**
**अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम् ।।११।।**

यथा मम-

**लज्जामज्जल्लोल-तारान्त-कान्ता-**
**स्तिर्यङ्-निर्यङ्-केतकीपत्रतीक्ष्णाः ।**
**मग्नाश्चित्ते कस्य निर्यान्ति भूयः**
**प्रेमोन्मीलत्पक्ष्मलाक्षी-कटाक्षाः ।।२.७।।**

**श्लथस्वभावान्माधुर्यं शालिन्याः परिवर्ज्यते ।**
**रुचिः प्रयाति मन्दाग्नेः क्षीरेणात्यन्तमन्दताम् ।।१२।।**

**विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता ।**
**कलापरिचयैर्याता लटभेव प्रगल्भताम् ।।१३।।**

यथा मम-

**अत्र चैत्रसमये निरन्तराः प्रोषिताहृदयकीर्णपावका ।**
**वान्ति कामुकमनोविमोहना व्याललोलमलयाचलानिलाः ।।२.८।।**

**अविसर्गैस्तु पादान्तैर्निष्प्रभैव रथोद्धता ।**
**अप्रार्थनाप्रणयिनी म्लानमानेव मानिनी ।।१४।।**

यथा कलशकस्य-

**अञ्जलौ जलमधीरलोचना लोचन-प्रतिशरीर-शारितम् ।**
**आत्तमात्तमपि कान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।।२.९।।**

**साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा ।**
**स्वागता स्वागता भाति कविकर्मविलासिनी ।।१५।।**

यथा मम-

**व्यावलन्ति तरला जलधाराः पान्थसङ्गमधृतेःपरिहाराः ।**
**प्रान्त-रत्न-निभ-विद्युदुदाराः प्रावृषः पृथुपयोधरहाराः ।।२.१०।।**

न तु यथा ममैव-

**अम्बरेऽम्बुभरलम्बिपयोदे मत्तबर्हिरुचिरेऽद्रिनितम्बे ।**
**पुष्पधामनि कदम्बकदम्बे का गतिः पथिक कालविलम्बे ।।२.११।।**

**द्रुततालयैरेव व्यक्तं रूक्षाक्षरैः पदैः ।**
**प्रनर्तयति यच् चित्तं तत् तोटकमभीप्सितम् ।।१६।।**

यथा मम-

**मदघूर्णितलोचनषट्चरणं घनरागमनङ्गकराभरणम् ।**
**कमलद्युति मुग्धवधूवदनं सुकृती पिबतीह सुधासदनम् ।।२.१२।।**

**असमस्तपदैः पादसंधिविच्छेदसुन्दरम् ।**
**सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम् ।।१७।।**

यथा **भट्टबाणस्य**-(काद.प्र.२)

**जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।**
**सुरासुराधीशशिखान्तशायिनस्तमश्छिदस्त्र्यम्बकपादपांसवः ।।२.१३।।**

विपरीतं यथास्यैव-(काद.प्र.४)

**नमामि भर्वोश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम् ।**
**समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि ।।२.१४।।**

**प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम् ।**
**विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम् ।।१८।।**

यथा मम-

**कमलपल्लववारिकणोपमं किमिव पासि सदा निधनं धनम् ।**
**कलभकर्णचलाञ्चलमञ्चलं स्थिरतराणि यशांसि न जीवितम् ।।२.१५।।**

द्रुतहीनं विलम्बितं यथा मम-

**निपततां भ्रमतां विनिमज्जतां प्रविशतां परिवारशतैरधः ।**
**तनुभृतां भव एव भवार्णवे भयमये भगवानवलम्बनम् ।।२.१६।।**

**आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः ।**
**शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ।।१९।।**

यथा **श्रीहर्षदेवस्य**-(रत्ना.२.८)

**दुर्वारां कुसुमशरव्यथां वहन्त्या**
**कामिन्या यदभिहितं पुरः सखीनाम् ।**
**तद् भूयः शिशुशुकसारिकाभिरुक्तं**
**धन्यानां श्रवणपथातिथित्वमेति ।।२.१७।।**

विपरीतं यथा मम-

**सङ्कोचव्यतिकरबद्धभीतिलोलै-**
**र्निर्याद्भिर्भ्रमरभरैः सरोरुहेभ्यः ।**
**आरब्धः क्षणमिव संध्यया जगत्या-**
**मुत्पत्त्यै घनतिमिरस्य बीजवापः ।।२.१८।।**

**वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे ।**
**ओजसा जायते कान्तिः सविकासविलासिनी ।।२०।।**

यथा विद्याधिपत्यपरनाम्नो रत्नाकरस्य-

**कण्ठश्रियं कुवलयस्तबकाभिराम-**
**दामानुकारिविकटच्छविकालकूटाम् ।**
**बिभ्रत् सुखानि दिशतादुपहारपीत-**
**धूपोत्थधूममलिनामिव धूर्जटिर्वः ।।२.१९।।**

**आकारेऽपि कृते पूर्वं बन्धेऽल्पपदपेशले ।**
**वसन्ततिलकं धत्ते निर्गन्धि रमणीयताम् ।।२१।।**

यथा **परिमलस्य-**

**अच्छासु हंस इव बालमृणालिकासु**
**भृङ्गो नवास्विव मधुद्रुममञ्जरीषु ।**
**कोऽवन्तिभर्तुरपरो रसनिर्भरासु**
**पृथ्वीपतिः सुकविसूक्तिषु बद्धभावः ।।२.२०।।**

**विसर्गहीनपर्यन्ता मालिनी न विराजते ।**
**चमरी छिन्नपुच्छेव वल्लीवालूनपल्लवा ।।२२।।**

यथा **भट्टभल्लटस्य-**

**वरमिह रवितापैः किं न शीर्णासि गुल्मे**
**किमु दवदहनैर्वा सर्वदाहं न दग्धा ।**
**यदहृदयजनौघैर्वृन्तपर्णानभिज्ञै-**
**रितरकुसुममध्ये मालति प्रोम्भितासि ।।२.२१।।**

संपूर्णा सा यथा **कालिदासस्य**-(कु.सु.२.६४)

**अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं**
**रतिवलयपदाङ्के चापमासज्य कण्ठे ।**
**सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः**
**शतमखमुपतस्थे प्राञ्जलिः पुष्पकेतुः ।।२.२२।।**

**द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा ।**
**प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता ।।२३।।**

द्वितीयार्धे समस्तपादा यथा **गन्दिनकस्य-**

**करतरलितबन्धं कञ्चुकं कुर्वतीनां**
**प्रतिफलितमिदानीं दैपमाताम्रमर्चिः ।**
**स्तनतटपरिणाहे भामिनीनां भविष्य-**
**न्नखपदलिपिलीलासूत्रपातं करोति ।।२.२३।।**

प्रथमार्धे समस्तपादा यथा **राजशेखरस्य**-(वि.शा.१.३०)

**इह हि नववसन्ते मञ्जरीपुञ्जरेणु-**
**च्छुरणधवलदेहा बद्धहेलं सरन्ति ।**

तरलमलिसमूहा हारिहुंकारकण्ठा
बहुलपरिमलालीसुन्दरं सिन्दुवारम् ।।२.२४।।

अज्ञोऽप्यलक्ष्यं मालिन्यां वीणायामिव विस्वरम् ।
श्रुत्वैवोद्वेगमायाति वाचा वक्तुं न वेत्ति तम् ।।२४।।

यथा भट्टेन्दुराजस्य-

रहसि हृतदुकूला शीलिता तैलदीपे
त्वदुपगतसमृद्धेः प्रेयसी श्रोत्रियस्य ।
विकिरति पटवासैर्हन्ति कर्णावतंसैः
शमयति मणिदीपं पाणिफूत्कानिलेन ।।२.२५।।

गुरुलघ्वादिनियमादविभ्रष्टेऽपि लक्षणात् ।
दोषस्त्वदुपगेत्यत्र श्रोत्रग्राहयोऽस्ति विस्वरः ।।२५।।

प्रथमं द्व्यक्षरैश्छेदैस्ततस्त्रिचतुराक्षरैः ।
पञ्चाक्षरैश्च पर्यन्ते नर्कुटं याति चारुताम् ।।२६।।

यथा वीरदेवस्य-

तव शतपत्रपत्रमृदुताम्रतलश्चरण-
श्चलकलहंसनूपुरवरध्वनिना मुखरः ।
महिषमहासुरस्य शिरसि प्रसभं निहितः
सकलमहीधरेन्द्रगुरुतां कथमम्ब गतः ।।२.२६।।

विपरीतं यथास्यैव-

सशिखिशिखेव धूमनिचिताञ्जनशैलगृहा
सकपिशपन्नगेव यमुनोन्नतनीलशिला ।
महिषमहासुरोपहितभासुरशूलकरा
बहुलनिशेव भासि सतडिद्गुणमेघयुता ।।२.२७।।

असमासैः पदैर्भाति पृथ्वी पृथ्वी पृथक्स्थिता ।
समासग्रन्थिभिः सैव याति सङ्कोचखर्वताम् ।।२७।।

पृथक्पदा यथा साहिलस्य-

कचग्रहमनुग्रहं दशनखण्डनं मण्डनं
दृगञ्जनमवञ्जनं मुखरसार्पणं तर्पणम् ।
नखार्दनमतर्दनं दृढमपीडनं पीडनं
करोति रतिसङ्गरे मकरकेतनः कामिनाम् ।।२.२८।।

समासवती यथा मम-

**कचग्रहसमुल्लसत्कमलकोषपीडाजड-**
**द्विरेफकलकूजितानुकृतसीत्कृतालङ्कृताः ।**
**जयन्ति सुरतोत्सवव्यतिकरे कुरङ्गीदृशां**
**प्रमोदमदनिर्भरप्रणयचुम्बिनो विभ्रमाः ।।२.२९।।**

**<u>पृथ्वी</u> साकारगम्भीरैरोजःसर्जिभिरक्षरैः ।**
**समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम् ।।२८।।**

यथा **भट्टनारायणस्य**-(वेणीसं.३.४)

**महाप्रलयमारुतक्षुभितपुष्करावर्तक-**
**प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।**
**रवः श्रवणभैरवः स्थगितरोदसीकन्दरः**
**कुतोऽद्य समरोदधेरयमभूतपूर्वः श्रुतः ।।२.३०।।**

**त्वरातरलविच्छेदैर्विभाति <u>हरिणी</u> पदैः ।**
**मन्थरैर्ग्रन्थिबद्धेव याति निःस्पन्दसङ्गताम् ।।२९।।**

तरलपदा यथा <u>दीपकस्य</u>-

**तनुधनहरक्रूरस्तेनोत्कटां विकटाटवीं**
**तरति तरसा शौर्योत्सेकात् स्वसार्थवशाज् जनः ।**
**पुर-वर-वधू-लीलावल्गत्-कटाक्षबलाकुले**
**नगरनिकटे पन्थाः पान्थ स्फुटं दुरतिक्रमः ।।२.३१।।**

मन्थरैर्यथा **भट्टेन्दुराजस्य**-

**गुणपरिचयस्तीर्थे वासस्थिरोभयपक्षता**
**वपुरतिदृढं वृत्तं सम्यक् सखे तव किं पुनः ।**
**सरति सुमते यस्त्वां पातुं दृशा विनिमेषया**
**बडिश विषमं तस्याक्षेपं करोषि सहासुभिः ।।२.३२।।**

**त्रिषु पादेषु विश्रान्तविलासैर्ललिता पदैः ।**
**अन्ते तरङ्गितगतिर्हरिणी हारिणीतराम् ।।३०।।**

यथास्यैव-

**उपपरिसरं गोदावर्याः परित्यजताध्वगाः**
**सरणिमपरो मार्गस्तावद् भवद्भिरवेक्ष्यताम् ।**
**इह हि विहितो रक्ताशोकः कयापि हताशया**
**चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ।।२.३३।।**

**शिखरिण्याः समारोहात् सहजैवौजसः स्थितिः ।**
**सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम् ।।३१।।**

यथा **मुक्ताकणस्य-**

**यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति**
**स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।**
**यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-**
**स्तथा मन्ये लग्नः पथिक तरुषण्डे स्मरदवः ।।२.३४।।**

विपरीता यथा **भट्टश्यामलस्य-**

**धृतो गण्डाभोगे मधुप इव बद्धोऽब्जविवरे**
**विलासिन्या मुक्तो बकुलतरुमापुष्पयति यः ।**
**विलासो नेत्राणां तरुणसहकारप्रियसखः**
**स गण्डूषः सीधोः कथमिव शिरः प्राप्स्यति मधोः ।।२.३५।।**

**शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते ।**
**मुक्तालतायाा निःसूत्रमुक्तैर्मुक्ताफलैरिव ।।३२।।**

यथा **भट्टभवभूतेः**-(मा.मा.५.५०)

**असारं संसारं परिमुषितरत्नं त्रिभुवनं**
**निरालोकं लोकं मरणशरणं बान्धवजनम् ।**
**अदर्पं कंदर्पं जननयननिर्माणमफलं**
**जगज् जीर्णारण्यं कथमसि विधातुं व्यवसितः ।।२.३६।।**

**श्लोकेऽस्मिन् सचमत्कारसरसास्वादशालिनि ।**
**केवलं शिखरिण्यैव स्वरूपमहारितम् ।।३३।।**

**मन्थराक्रान्तविस्रब्धैश्चतुर्भिः प्रथमाक्षरैः ।**
**मध्यषट्केऽतिचतुरे मन्दाक्रान्ता विराजते ।।३४।।**

यथा **कालिदासस्य**-(मेघ.५१)

**ब्रह्मावर्तं जनपदमधश्छायया गाहमानः**
**क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः ।**
**राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा**
**धारासारैस्त्वमिव कमलान्यभ्यषिञ्चन् मुखानि ।।२.३७।।**

आदिमध्ये तुल्या यथास्यैव-(मेघ.१)

**कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः**
**शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ।**

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ।।२.३८।।

**साकाराद्यक्षरैः पादपर्यन्तैः सविसर्गकैः ।**
**<u>शार्दूलक्रीडितं</u> धत्ते तेजोजीवितमूर्जितम् ।।३५।।**

यथा **भट्टश्यामलस्य**-

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागर-प्रमथन-क्रीडाकृतौ मन्दरो
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ।।२.३९।।

विपरीतं यथा **लाटडिण्डीरस्य**-

चित्रं तावदिदं सुरेन्द्रभवनान्मन्दाकिनीपाथसा
केनाप्युत्तमतेजसा नृपतिना क्ष्मामण्डलं मण्डितम् ।
नातश्चित्रतरं निशाकरकलालावण्यदुग्धोदधे!
भूमेर्यद् भवता विरिञ्चिनगरी कीर्तिप्लवैः प्लाव्यते ।।२.४०।।

**विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव ।**
**शार्दूलक्रीडितं याति पाठे सायासतामिव ।।३६।।**

यथा **मुक्ताकणस्य**-

लीलाचामरडम्बरो रतिपतेर्बालाम्बुदश्रेणयो
रागोद्दण्डशिखण्डिनो मुखविधूद्भूतास्तमोविभ्रमाः ।
सौगन्ध्योद्धत-धावदाकुल-वलन्मत्तालिमालाकुलो
धम्मिल्लो हरिणीदृशो विजयते स्रस्तो रतिव्यत्यये ।।२.४१।।

**विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् ।**
**शार्दूलक्रीडितं भाति विपरीतमतोऽधमम् ।।३७।।**

पूर्वार्धे यथा **भट्टभवभूतेः** -

अज्ञानाद् यदि वाधिपत्यरभसादस्मत्परोक्षं हृता
सीतेयं प्रविमुच्यतां शठ मरुत्पुत्रस्य हस्तेऽधुना ।
नो चेल् लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ।।२.४२।।

विपरीतं यथा **रिस्सोः**-

**स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदफेनच्छटा-**
**छायाहारिणि वारिणि द्युसरितो डिण्डीरविस्तारिणि ।**
**आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा**
**कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ।।२.४३।।**

**आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वातिशायिनोः ।**
**शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम् ।।३८।।**

यथा **कालिदासस्य**-(शा.२.६)

**गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं**
**छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।**
**विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले**
**विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ।।२.४४।।**

**आद्यन्ताकारविरहात् पर्यन्ते चाविसर्गतः ।**
**शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ।।३९।।**

यथा **श्रीयशोवर्मणः**-

**यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं**
**मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।**
**येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-**
**स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ।।२.४५।।**

**सुकुमाररसस्यात्र रक्षायै वृत्तमुद्धतम् ।**
**वाक्पाकेनैव गलितं कविना नीतमल्पताम् ।।** (अन्तरकारिका)

**आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी ।**
**असंस्यूतविरामा च <u>स्रग्धरा</u> राजतेतराम् ।।४०।।**

यथा **राजशेखरस्य**-(बा.रा.१.६३)

**ताम्बूलीनद्धमुग्धक्रमुकतरुलताप्रस्तरे सानुगाभिः**
**पायं पायं कलायी[1]कृतकदलिदलं नारिकेलीफलाम्भः ।**
**सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-**
**र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ।।२.४६।।**

---

१. 'ची'-ति तु वक्रोक्तिजीविते ।

विपरीतं यथा **चक्रस्य**-

**सत्यं पातालकुक्षिंभरि चिरविलसद्दिक्करि प्रीणिताभ्रं**
**श्रीगर्भश्वभ्रमभ्रंलिहलहरि हरिस्थानमप्येव किञ्चित् ।**
**कल्पान्ते व्याप्तविश्वं परिरटति सरिन्नाथ! पाथस्त्वदीयं**
**किं त्वेतत् कुम्भयोनेः करकुहरदरीपूरमाचामतोऽभूत् ।।२.४७।।**

**आद्यन्ताकारविरहाद् बन्धदोषः स्फुटोऽपि यः ।**
**अविलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते ।।४१।।**

यथा मम-

**शौर्यश्रीकेशपाशः करिदलनमिलन्मौक्तिकव्यक्तपुष्पः**
**क्षोणीरक्षाभुजङ्गः कुलशिखरिलुठत्कीर्तिनिर्मोकपट्टः ।**
**शत्रु-व्रात-प्रताप-प्रलय-जलधर-स्फार-धारा-करालः**
**प्रीत्यै लक्ष्मीकटाक्षः कुवलयविजयी यस्य पाणौ कृपाणः ।।२.४८।।**

**एवमुद्देशलेशेन वृत्तानां दर्शितः क्रमः ।**
**अनयैव दिशा सर्वं ज्ञेयं तज्ज्ञैर्यथोचितम् ।।४२।।**

**मन्दाक्रान्ता भवेन् मध्ये शालिनी पूरिताक्षरा ।**
**उपेन्द्रवज्रं वंशस्थं पर्यन्तैकाक्षराधिकम् ।।४३।।**

**इत्यादि दर्शितं नेह स्वतःसिद्धो ह्ययं क्रमः ।**
**न वेत्ति तदवृत्तज्ञस्तज्ज्ञस्य क्वोपयुज्यते ।।४४।।**

**इति परिचितनानारूपवाणीगुणानां**
**विदित-विविधदोषोद्देशलेशान्तराणाम् ।**
**इदमतिशय-सूक्ष्मैर्वृत्त-चर्चा-विचारै-**
**रभिहितमभिगम्यं योगितुल्याशयानाम् ।।४५।।**

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनाम**श्रीक्षेमेन्द्रविरचिते**
**सुवृत्ततिलके** गुणदोषदर्शनं नाम
द्वितीयो विन्यासः ॥२॥

## तृतीयो विन्यासः

### वृत्तविनियोग:

प्रबन्धः सुतरां भाति यथास्थानं विवेचकः(निवेशितैः)।
निर्दोषैर्गुणसंयुक्तैः सुवृत्तैर्मौक्तिकैरिव ।।१।।

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ।।२।।

शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् ।
काव्यं विशिष्टशब्दार्थसाहित्यं सदलङ्कृति ।।३।।

शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् ।
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते ।।४।।

तत्र केवलशास्त्रेऽपि केचित् काव्यं प्रयुञ्जते ।
तिक्तौषधरसोद्वेगे गुडलेशमिवोपरि ।।५।।

यथा वैद्यके वाग्भटस्य-

मधु मुखमिव सोत्पलं प्रियायाः
कलरसना परिवादिनी प्रियेव ।
कुसुमचयमनोहरा च शय्या
किसलयिनी लतिकेव पुष्पिताग्रा ।।३.१।।

शास्त्रं कुर्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा ।
येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ।।६।।

काव्ये रसानुसारेण वर्णनानुगुणेन च ।
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ।।७।।

शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् ।
काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ।।८।।

पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु ।
उपदेशप्रधानेषु कुर्यात् सर्वेष्वनुष्टुभम् ।।९।।

नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् ।
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ।।१०।।

उग्रगोग्रहसङ्ग्रामे तत्कालसदृशोपमाः ।
दृष्टास्त एव वैराटेस्त एवाश्वाः किरीटिनः ।।११।।

तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः ।
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव ।।१२।।

वृत्तरत्नावली कामादस्थाने विनिवेशिता ।
कथयत्यज्ञतामेव मेखलेव गले कृता ।।१३।।

नहि नाम नवोन्मेषिकुचायाश्चारुचक्षुषः ।
चिरत्यक्तस्मराचारे जराजीर्णकचे रुचिः ।।१४।।

तस्मादत्र यथास्थाने विनियोगाय सङ्गतिः ।
उदाहरणदिङ्मात्रैर्दर्शिताभिमता सताम् ।।१५।।

आरम्भे सर्गबन्धस्य कथाविस्तरसङ्ग्रहे ।
शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ।।१६।।

आरम्भे यथा **भर्तृमेण्ठस्य**-

**आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।**
**प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ।।३.२।।**

कथाप्रसङ्गे **यथाभिनन्दस्य**-

**तस्यां निजभुजोद्योगविजितारातिमण्डलः ।**
**आखण्डल इव श्रीमान् राजा शूद्रक इत्यभूत् ।।३.३।।**

शमोपदेशे मथा मम-

**पृथुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।**
**अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ।।३.४।।**

शृङ्गारालम्बनोदारनायिकारूपवर्णनम् ।
वसन्तादि तदङ्गं च सच्छायमुपजातिभिः ।।१७।।

रूपवर्णनं यथा **कालिदासस्य**-(कु.सं.१.३९)

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ।।३.५।।**

वसन्तवर्णनं यथास्यैव-(कु.सं.३.२९)

**बालेन्दुवक्राण्यविकासभावाद् बभुः पलाशान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ।।३.६।।**

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु ।**
**षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते ।।१८।।**

चन्द्रोदये यथास्यैव-

**अङ्गुलीभिरिव केशसञ्चयं संनियम्य तिमिरं मरीचिभिः ।**
**कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ।।३.७।।**

नीतिर्यथा **भारवेः**-(कि.१.१)

**श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।**
**स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ।।३.८।।**

**वसन्ततिलकं भाति सङ्करे वीररौद्रयोः ।**
**कुर्यात् सर्गस्य पर्यन्ते मालिनीं द्रुततालवत् ।।१९।।**

वीररौद्रयोर्यथा **रत्नाकरस्य**-(हरवि )

**जृम्भाविकासितमुखं नखदर्पणान्त-**
**राविष्कृतप्रतिमुखं गुरुरोषगर्भम् ।**
**रूपं पुनातु जनितारिचमूविमर्श-**
**मुद्वृत्तदैत्यवधनिर्वहणं हरेर्वः ।।३.९।।**

सर्गान्ते यथा **कालिदासस्य**-(कु.सं.१.६०)

**अवचितबलिपुष्पा वेदिसंमार्गदक्षा**
**नियमविधिजलानां बर्हिषां चोपनेत्री ।**
**गिरिशमुपचचार प्रत्यहं सा सुकेशी**
**नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ।।३.१०।।**

**उपपन्नपरिच्छेदकाले शिखरिणी मता ।**
**औदार्यरुचिरौचित्यविचारे हरिणी वरा ।।२०।।**

उपपन्नपरिच्छेदे यथा **भर्तृहरेः**-(सु.सं.२८७)

**भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो**
**विचित्रालापानां वयमपि कवीनामनुचराः ।**
**तथाप्येवं ब्रूमो न हि परहितात् पुण्यमपरं**
**न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ।।३.११।।**

औदार्येऽप्यस्यैव-(सु.सं.१६२)

**विपुलहृदयैरन्यैः कैश्चिज् जगज् जनितं पुरा**
**विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।**
**इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते**
**कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ।।३.१२।।**

**साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा ।**
**प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते ।।२१।।**

साक्षेपे यथा **यशोवर्मणः**-

**स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे**
**गतः सफुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः ।**
**तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा**
**क्व स क्व स दशाननो ननु निवेद्यतां राक्षसः ।।३.१३।।**

प्रावृट्प्रवासे यथा **कालिदासस्य**-(मेघ.२)

**तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी**
**नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।**
**आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं**
**वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ।।३.१४।।**

**शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् ।**
**सावेगपवनादीनां वर्णने स्रग्धरा मता ।।२२।।**

शौर्यस्तवे यथा **श्रीचक्रस्य**-

**नेतुं नौभिरिभा न भान्ति दृतिभिस्तार्याः कियन्तो हया-**
**स्तज्जानुद्वयसेन देव पयसा सैन्यं समुत्तार्यताम् ।**
**नो चेद् भङ्गभयद्रुतारिवनितानेत्रप्रणालीलुठद्-**
**बाष्पाम्भःप्लवपूरितोभयतटी द्राग् वत्स्यर्तीरावती[१] ।।३.१५।।**

१. सरिद्विशेषः ।

सावेगपवने यथा मम **पवनपञ्चाशिकायाम्**-

**प्रेङ्खच्छङ्खाभिघातस्फुटदखिलचलच्छुक्तिनिर्मुक्तमुक्ता-**
**मुक्तव्यक्ताट्टहासाः स्मरनृपसकलद्वीपसञ्चारचाराः ।**
**सर्पत्कर्पूरपूरप्रवणकरचिता दिग्वधूकर्णपूरा**
**धावन्त्याध्मातविश्वा रतविधुतवधूबन्धवो गन्धवाहाः ।।३.१६।।**

**दोधकतोटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम् ।**
**निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः ।।२३।।**

**शेषाणामप्यनुक्तानां वृत्तानां विषयं विना ।**
**वैचित्र्यमात्रपात्राणां विनियोगो न दर्शितः ।।२४।।**

**इत्येष वश्यवचसां सर्ववृत्तप्रसङ्गिनाम् ।**
**उक्तो विभागः सदवृत्तविनिवेशे विशेषवान् ।।२५।।**

**एकस्मिन्नेव यैर्वृत्ते कृतो द्वित्रेषु वा श्रमः ।**
**न नाम विनियोगार्हास्ते दरिद्रा इवोत्सवे ।।२६।।**

**वृत्ते यस्य भवेद् यस्मिन्नभ्यासेन प्रगल्भता ।**
**स तेनैव विशेषेण स्वसंदर्भे प्रदर्शयेत् ।।२७।।**

**एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते ।**
**तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात् ।।२८।।**

**अनुष्टुप् सततासक्ता साभिनन्दस्य नन्दिनी ।**
**विद्याधरस्य वदने गुलिकेव प्रभावभूः ।।२९।।**

**स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः ।**
**चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ।।३०।।**

**वृत्तच्छन्नस्य सा कापि वंशस्थस्य विचित्रता ।**
**प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता ।।३१।।**

**वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी ।**
**रत्नाकरस्योत्कलिका चकास्त्यानननकानने ।।३२।।**

भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
रुचिरा घनसंदर्भे या मयूरीव नृत्यति ।।३३।।

सुवशा कालिदासस्य मन्दाक्रन्ता प्रवल्गति ।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ।।३४।।

शार्दूलक्रीडितैरेव प्रख्यातो राजशेखरः ।
शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः ।।३५।।

इत्येवं पूर्वकवयः सर्ववृत्तकरा अपि ।
अस्मिन् हार इवैकस्मिन् प्रायेणाभ्यधिकादराः ।।३६।।

सुवर्णार्हप्रबन्धेषु यथास्थाननिवेशिनाम् ।
रत्नानामिव वृत्तानां भवत्यभ्यधिका रुचिः ।।३७।।

तस्माद् यथायं विनियोगमार्गः
प्रदर्शितो वृत्तनिवेशनेषु ।
तथैव कार्यः कविभिः कृतज्ञै-
रवश्यवाचां नियमस्तु नायम् ।।३८।।

इत्यारुरुक्षोः प्रथमोपयुक्तं प्रवृत्तवाचश्च विवेककारि ।
महाकवेरप्यतिसूक्ष्म-तत्त्वविचारहर्ष-प्रदमेतदुक्तम् ।।३९।।

इत्यौचित्यप्रचुररचनाविश्रुतश्रव्यवृत्त-
व्यक्तिः शक्तिप्रसृतवचसां दर्शिता सङ्ग्रहेण ।
क्षेमेन्द्रेण प्रणयिविपदां हर्तुराश्चर्यकर्तु-
र्भूभृद्भर्तुर्भुवनजयिनोऽनन्तराजस्य राज्ये ।।४०।।

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनाम**श्रीक्षेमेन्द्र**विरचिते
**सुवृत्ततिलके वृत्तविनियोगो** नाम
तृतीयो विन्यासः ।।३।।

## परिशिष्टम् - १

### सुवृत्ततिलके
## कारिकासूची

000

# परिशिष्टम् - २

## सुवृत्ततिलके

## कारिकोदाहरणसूची

000

परिशिष्टम् - ३

## सुवृत्ततिलके छन्दोऽनुक्रमः

| | | | |
|---|---|---|---|
| ०१. अनुष्टुप् (श्लोकः) | १.१४ | १५. मालिनी | १.३० |
| ०२. इन्द्रवज्रा | १.३८ | १६. रथोद्धता | १.२३ |
| ०३. उपजाति | १.२० | १७. रुक्मिणी | १.१७ |
| ०४. उपेन्द्रवज्रा | १.१९ | १८. वंशस्थम् | १.२६ |
| ०५. कुमारललिता | १.१० | १९. वसन्ततिलकम् | १.२९ |
| ०६. तनुमध्या | १.१० | २०. विद्युन्माला | १.१२ |
| ०७. तोटकम् | १.२५ | २१. शार्दूलविक्रीडितम् | १.३६ |
| ०८. दोधकम् | १.२१ | २२. शालिनी | १.२२ |
| ०९. द्रुतविलम्बितम् | १.२७ | २३. शिखरिणी | १.३४ |
| १०. नर्कुटकम् | १.३१ | २४. शिशुभृता | १.१६ |
| ११. पृथ्वी | १.३२ | २५. श्लोक (अनुष्टुप्) | १.१४ |
| १२. प्रमाणी | १.१३ | २६. स्रग्धरा | १.३७ |
| १३. प्रहर्षिणी | १.२८ | २७. स्वागता | १.२४ |
| १४. मन्दाक्रान्ता | १.३५ | | |

000

## परिशिष्टम् - ४

# सुवृत्ततिलके वृत्तानि

| | | | | |
|---|---|---|---|---|
| ०१. | षडक्षरा | तनुमध्या | ऽऽ। ।ऽऽ | १.१० |
| ०२. | सप्ताक्षरा | कुमारललिता | ।ऽ। ।।ऽ ऽ | १.१० |
| ०३. | अष्टाक्षज़रा | विद्युन्माला | ऽऽऽ ऽऽऽ ऽऽ | १.१२ |
| ०४. | | प्रमाणी | प्रस्तार अनिश्चित | १.१३ |
| ०५. | | अनुष्टुप् श्लोक | श्रव्यतायाः प्रधानता(१.१५) | १.१४,१५ |
| ०६. | नवाक्षरा | शिशुभृता | ।।। ।।। ऽऽऽ | १.१६ |
| ०७. | दशाक्षरा | रुक्मिणी | ऽ।। ऽऽऽ ।।ऽ ऽ | १.१७ |
| ०८. | एकादशाक्षरा | इन्द्रवज्रा | ऽऽ। ऽऽ। ।ऽ। ऽऽ | १.१८ |
| ०९. | | उपेन्द्रवज्रा | ।ऽ। ऽऽ। ऽऽ। ऽ।। | १.१९ |
| १०. | | उपजातय | ८ ९,९+८ | १.२० |
| ११. | | दोधकम् | ऽ।। ऽ।। ऽ।। ऽऽ | १.२१ |
| १२. | | शालिनी | ऽऽऽ ऽऽ। ऽऽ। ऽऽ | १.२२ |
| १३. | | रथोद्धता | ऽ।ऽ ।।। ऽ।ऽ ।ऽ | १.२३ |
| १४. | | स्वागता | ऽ।ऽ ।।। ऽ।। ऽऽ | १.२४ |
| १५. | द्वादशाक्षरम् | तोटकम् | ।।ऽ ।।ऽ ।।ऽ ।।ऽ | १.२५ |
| १६. | | वंशस्थम् | ।ऽ। ऽऽ। ।ऽ। ऽ।ऽ | १.२६ |
| १७. | | द्रुतविलम्बितम् | ।।ऽ ऽ।। ऽ।। ऽ।ऽ | १.२७ |
| १८. | त्रयोदशाक्षरा | प्रहर्षिणी | ऽऽऽ ।।। ।ऽ। ऽ।ऽ ऽ | १.२८ |
| १९. | चतुर्दशाक्षरम् | वसन्ततिलकम् | ऽऽ। ऽ।। ।ऽ। ।ऽ। ऽऽ | १.२९ |
| २०. | पञ्चदशाक्षरा | मालिनी | ।।। ।।। ऽऽऽ ।ऽऽ ।ऽऽ | १.३० |
| २१. | सप्तदशाक्षरा | नर्कुटकम् | ।।। ।ऽ। ऽ।। ।ऽ। ।ऽ। ।ऽ | १.३१ |
| २२. | | पृथ्वी | ।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽऽ ।ऽ | १.३२ |
| २३. | | हरिणी | ।।। ।।ऽ ऽऽऽ ऽ।ऽ ।।ऽ ।ऽ | १.३३ |
| २४. | | शिखरिणी | ।ऽऽ ऽऽऽ ।।। ।।ऽ ऽ।। ।ऽ | १.३४ |
| २५. | | मन्दाक्रान्ता | ऽऽऽ ऽ।। ।।। ऽऽ। ऽ।। ऽऽ | १.३५ |
| २६. | एकोनविंशाक्षरा | शार्दूलविक्रीडितम् | ऽऽऽ ।।ऽ ।ऽ। ।।ऽ ऽऽ। ऽऽ। ऽ | १.३६ |
| २७. | एकविंशाक्षरा | स्त्रग्धरा | ऽऽऽ ऽ।ऽ ऽ।। ।।। ।ऽऽ ।ऽऽ ।ऽऽ | १.३७ |